॥ प्रकृतिस्तोत्रम् ॥

प्रसीद प्रपञ्चस्वरूपे प्रधाने प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे ।
प्रणोतुं प्रभो प्रारभे प्राञ्जलिस्त्वां प्रकृताप्रतर्क्ये प्रकामप्रवृत्ते ॥ १॥

स्तुतिर्वाक्यबद्धा पदात्मैव वाक्यं पदं त्वक्षरात्माक्षरं त्वं महेशि ।
ध्रुवं त्वां त्वमेवाक्षरैस्त्वन्मयैस्तोष्यसि त्वन्मयी वाक्प्रवृत्तिर्यतः स्यात् ॥ २॥

अजाधोक्षजत्रीक्षणाश्चापि रूपं परं नाभिजानन्ति मायामयं ते ।
स्तुवन्तीशि तां त्वाममी स्थूलरूपां तदेतावदम्बेह युक्तं ममापि ॥ ३॥

नमस्ते समस्तेशि विन्दुस्वरूपे नमस्ते रवत्वेन तत्त्वाभिधाने ।
नमस्ते महत्वं प्रपन्ने प्रधाने नमस्ते त्वहङ्कारतत्वस्वरूपे ॥ ४॥

नमः शब्दरूपे नमो व्योमरूपे नमः स्पर्शरूपे नमो वायुरूपे ।
नमो रूपतेजोरसाम्भः स्वरूपे नमस्तेस्तु गन्धात्मिके भूस्वरूपे ॥ ५॥

नमः श्रोत्रचर्माक्षिजिह्वास्थनासास्यवाक्पाणिपत्पायुसोपस्थरूपे ।
मनोबुद्ध्यहङ्कारचित्तस्वरूपे विरूपे नमस्ते विभो विश्वरूपे ॥ ६॥

रवित्वेनभूत्वान्तरात्मा दधासि प्रजाश्चन्द्रमस्त्वेन पुष्णासि भूयः ।
दहस्यग्निमूर्तिर्वहन्त्याहुतिं ना महादेवि तेजस्त्रयं त्वत्त एव ॥ ७॥

चतुर्वक्त्रयुक्ता लसद्धंसवाहा रजःसंश्रिता ब्रह्मसंज्ञां दधाना ।
जगत्सृष्टिकार्या जगन्मातृभूते परं त्वत्पदं ध्यायसीशि त्वमेव ॥ ८॥

विराजत्किरीटा लसच्चक्रशङ्खा वहन्ती च नारायणाख्यां जगत्सु ।
गुणं सत्त्वमास्थाय विश्वस्थितिं यः करोतीह सोंऽशोपि देवि त्वमेव ॥ ९॥

जटाबद्धचन्द्राहिगङ्गा त्रिनेत्रा जगत्संहरन्ती च कल्पावसाने ।
तमः संश्रिता रुद्रसंज्ञां दधाना वहन्ती परश्वक्षमाले विभासि ॥ १०॥

सचिन्ताक्षमाला सुधाकुम्भलेखाधरा त्रीक्षणार्द्धेन्दुराजत्कपर्दा ।
सुशुक्लांशुकाकल्पदेहा सरस्वत्यपि त्वन्मयैवेशि वाचामधीशा ॥ ११॥

लसच्छङ्खचक्रा चलत्खड्गभीमा नदत्सिंहवाहा ज्वलत्तुङ्गमौलिः ।
द्रवद्दैत्यवर्गा स्तुवत्सिद्धसङ्घा त्वमेवेशि दुर्वापि सर्गादिहीने ॥ १२॥

पुरारातिदेहार्धभागा भवानी गिरीन्द्रात्मजात्वेन यैषा विभाति ।
महायोगिवन्द्या महेशा सुनाथा महेश्यम्बिका तत्त्वतस्त्वन्मयैव ॥ १३॥

लसकौस्तुभोद्भासिते व्योमनीले वसन्तीं च वक्षःस्थले कैटभारेः ।
जगद्वल्लभां सर्वलोकैकनाथां श्रियं तामहं देव्यहं त्वामवैमि ॥ १४॥

अजाद्रीड्गुहाब्जाक्षपोत्रीन्द्रकाणाम् महाभैरवस्यापि चिह्नं वहन्त्यः ।
विभो मातरः सप्त तद्रूपरूपाः स्फुरन्त्यस्त्वदंशा महादेवि ताश्च ॥ १५॥

समुद्यद्दिवाकृत्सहस्राभभासा सदा सन्तताशेषविश्वावकाशे ।
लसन्मौलिबद्धेन्दुलेखे सपाशाङ्कुशाभीत्यभीष्टात्तहस्ते नमस्ते ॥ १६॥

प्रभाकीर्तिकान्ती दिवारात्रिसन्ध्याः क्रियाशा तमिस्रा क्षुधाबुद्धिमेधाः ।
धृतिर्वाञ्छतिः सन्ततिः श्रीश्च
भक्तिस्त्वमेवेशियेऽन्ये च शक्तिप्रभेदाः ॥ १७॥

हरे बिन्दुनादैः सशक्त्याख्यशान्तैर्नमस्तेस्तु भेदप्रभिन्नैरभिन्ने ।
सदा सप्तपाताललोकाचलाब्धिग्रहद्वीपधातुस्वरादिस्वरूपे ॥ १८॥

नमस्ते समस्ते समस्तस्वरूपे समस्तेषु वस्तुष्वनुस्यूतशक्ते ।
श्रितस्थूलसूक्ष्मस्वरूपे महेशि स्मृते बोधरूपेप्यबोधस्वरूपे ॥ १९॥

मनोवृत्तिरस्तु स्मृतिस्ते समस्ता तथा वाक्प्रवृत्तिः स्तुतिः स्यान्महेशि ।
शरीरप्रवृत्तिः प्रणामक्रिया स्यात् प्रसीद क्षमस्व प्रभो सन्ततं मे ॥ २०॥

हृल्लेखाजपविधिमर्चनाविशेषानेतास्तां स्तुतिमपि नित्यमादरेण ।
योऽभ्यस्येत्स खलु परां श्रियं च गत्वा शुद्धं
तद् व्रजति पदं परस्य धाम्नः ॥ २१॥

इति हृल्लेखाविहितो विधिरुक्तः संग्रहेण सकलोऽयम् ।
योऽस्मिन्नियतमना मन्त्री योगी स्यात् स एव भोगी च ॥ २२॥

इति-आद्यशङ्कराचार्यविरचितं प्रकृतिस्तोत्रम् ॥